समग्रदुःखमायत्तमविज्ञाने द्वयाश्रयम् ।
सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ॥
इदमेवमुदारार्थमज्ञानार्थप्रकाशकम् ।
शास्त्रं दृष्टिप्रनष्टानां यथैवादित्यमण्डलम् ॥ ३३ ॥

तत्र श्लोकाः ।

अर्थेदशमहामूलाः संज्ञा चैषां यथा कृता ।
अयनान्ताः षडग्र्याश्च रूपं वेदविदाञ्च यत् ॥

गङ्गाधरः—अथैवमविज्ञानामविज्ञानफलमाह—समग्रेत्यादि । जनानामविज्ञाने खलु आयत्तमधीनं द्वयाश्रयं मनःशरीराश्रयं समग्रदुःखम् आधिभौतिकाधिदैविकाध्यात्मिकं तथा जनानां विज्ञाने विमले च द्वयाश्रयं मनःशरीराश्रयं समग्रं सुखं प्रतिष्ठितमिति । एतच्चरकशास्त्रस्य प्रभावमाह—इदमित्यादि । एवमनेन प्रकारेणोदारमर्थं लोकद्वयहितार्थमिदं चरकप्रोक्तं शास्त्रमज्ञानार्थप्रकाशकम् अज्ञानानां सम्बन्धेऽर्थप्रकाशकम् यथादित्यमण्डलं दृष्टिप्रनष्टानां लौकिकतमसा दृष्ट्या चक्षुषा प्रनष्टा ये रात्रौ तेषामर्थस्य दृश्यस्य प्रकाशकं तथा ; न तु प्रनष्टदृशां न ह्यन्धतैमिरिकादीनां सम्बन्धेऽर्थप्रकाशकमादित्यमण्डलमिति ॥ ३३ ॥

गङ्गाधरः—अथाध्यायार्थसंग्रहार्थमाह—तत्र श्लोका इति । अर्थेदशेत्यादि । अर्थे दश महामूलाः सिराः सक्ता महाफला इति । एषां हृदयस्यार्थसंज्ञा,

पक्षः, अक्षणिकत्वं—पृच्छार्थमनुयुक्तस्य 'सम्प्रति वक्तुं क्षणो नास्ति' इति भाषणम्, अर्त्तिः—पृच्छार्थमनुयुक्तस्य शिरोव्यथादिकम् उच्चार्य्य श्लाघमानं भाषणम्, दम्भः पुस्तकवैद्यभाण्डादिभिः स्वार्थोत्कर्षप्रतिपादनम्, पारुष्यं कृच्छ्रतोऽपि न वाच्यत्वादि परुषभाषणम् । अनाप्ताः स्वे तन्त्र इति स्वतन्त्रानभिज्ञत्वात्, परविकत्थकाः परदूषणाः । द्वयाश्रयमिति मनःशरीराश्रयम् ; समग्रमिति शारीरं मानसञ्च, सुखमारोग्यादिरूपम्, विज्ञाने विमल इति विशुद्धज्ञाने, किंवा विज्ञाने विमल इति मोक्षे, मोक्षे हि सुखं समग्रं दुःखासंभिन्नत्वात्, किंवा भद्रदर्शनाद्दानाकृत्योद्भवम्, इदमिति शास्त्रम्, एवमुदारार्थमिति लोकद्वयहितार्थाभिधायकम्, दृष्टिप्रनष्टानामिति प्रनष्टदृशाम् ॥ ३२ । ३३ ॥

चक्रपाणिः—संग्रहे संज्ञा चैषां यथा कृतेति "तेन मूलेन महता महामूलाः" इत्यादिना ;

सप्तकश्चाष्टकश्चैव परिप्रश्नः सनिर्णयः ।
यथा वाच्यं यदर्थञ्च षड् विधाश्चैकदेशिकाः ॥
अर्थेदशमहामूले सर्व्वमेतत् प्रकाशितम् ।
संग्रहश्चायमध्यायस्तन्त्रस्यास्यैव केवलः ॥
यथा सुमनसां सूत्रं संग्रहार्थं विधीयते ।
संग्रहार्थं तथार्थानामृषिणा संग्रहः कृतः ॥ ३४ ॥

महामूलसंज्ञा सिराणां, धमनी सिरास्रोतःसंज्ञा । एकं प्राणवर्द्धनानामित्यादिना एकमयनानां तेषां विवरणञ्च, ब्रह्मचर्य्यमयनानामित्यन्ताः षड्ग्र्याः श्रेष्ठाः षट् । वेदविदामायुर्व्वेदविदां त्रिधा रूपं प्राणाभिसर-सिद्धसाधित-भिषक्छद्मचररूपं तेषां विशेषरूपञ्च । सप्तक इति । किमायुश्चेत्यादिना सप्तकः सनिर्णयः परिप्रश्नः । तथा तन्त्रं तन्त्रार्थानित्यादिना चाष्टकः सनिर्णयः परिप्रश्नः । यथा वाच्यं येन प्रकारेण यस्य प्रश्नस्योत्तरं वाच्यं तत् । यदर्थञ्च तदुत्तरं वाच्यं तत् । ऐकदेशिकाः षड् विधा भिषजः, पाल्लविकोपेताः प्रमादिनो दम्भिनो मुखरा अज्ञाः प्रभूतबहुभाषिणश्चेति षट् । एतत् सर्व्वमस्मिन् अर्थेदशमहामूलीये मुनिनात्रेयेण प्रकाशितम् । अयमध्यायश्चास्य चरकप्रोक्तस्य तन्त्रस्य केवलः कृत्स्नः संग्रहः । तत्र दृष्टान्तः—यथेत्यादि । सुमनसां पुष्पाणां संग्रहार्थं यथा सूत्रं ग्रन्थनेन संग्रहो भवति, तथार्थानां संग्रहार्थमेष संग्रहाध्याय ऋषिणा कृत इति ॥ ३४ ॥

अयनान्ताः षड्ग्र्याश्चेति 'एकं प्राणवर्द्धनानाम् इत्यादिनोक्ताः । एते चाहिंसादयोऽग्र्याधिकारे यज्जःपुरुषीये उक्तास्तानुल्लङ्घ्येहोक्ता अध्यात्मविषयत्वेन, पूर्व्वोक्तास्त्वग्र्यरोगाधिकारिणाम्, सप्तकः "किमायुश्च कस्मादायुर्व्वेदम्" इत्यादि. अष्टकः प्रश्नः 'तन्त्रं तन्त्रार्थम्" इत्यादि ॥ ३४ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तकृतायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायामर्थेदशमहामूलीयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

सूत्रस्थानं समाप्तम् ॥ १ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
इयताऽवधिना सर्व्वं सूत्रस्थानं समाप्यते ॥ ३५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अर्थेदशमहामूलीयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

गङ्गाधरः—अध्यायं समापयति—अर्थीत्यादि। सर्व्वं पूर्व्ववद् व्याख्यातव्यम्। स्थानं समापयति—अग्निवेशेत्यादि। अग्निवेशेन कृतं यत् तन्त्रं तदेव चरकेण प्रतिसंस्कृतं संस्कृत्यन्तरेण कृतं, तत्र तन्त्रे इयता खल्ववधिना एतत्पर्य्यन्तं सर्व्वं सूत्रस्थानं समाप्यते ॥ २५ ॥

गङ्गाधरः—अत्र श्लोकस्थाने द्वात्रिंशदक्षरात्मकश्लोकसंख्या तु अथातो दीर्घञ्जीवितीयमित्यारभ्यैतदन्तमिदं　　श्लोकस्थानमेकपिण्डेनैकीकरणेन श्लोकानां पञ्चविंशत्युत्तर-षट्शताधिक-सहस्रत्रयमिति (३६२५) श्लोकाः।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ श्लोकस्थाने
प्रथमस्कन्धे त्रिंशत्तमार्थेदशमहामूलीयाध्यायजल्पाख्या
त्रिंशत्तमी शाखा ॥ ३० ॥

श्लोकस्थानजल्पाख्यः प्रथमस्कन्धश्च
समाप्तः ॥ १ ॥

॥ श्रीः ॥

# छन्दोनियमः।

वेदो वेदान्तः आर्षग्रन्थाश्च सर्व्वे च्छान्दसच्छन्दोनिबद्धाः। अष्टाध्यायि-पाणिनीयसूत्र-साङ्ख्यसूत्र-गौतमसूत्रादयो विष्णुसंहितागौतमसंहिता-वसिष्ठ-संहिताप्रभृतयश्च ग्रन्थाश्छान्दसच्छन्दसैव संग्रथिताः। छान्दसच्छन्दोव्यतिरेकेण संहिता भवितुं नार्हति। छान्दसच्छन्दोऽविज्ञानात् पद्यांशोऽपि गद्यरूपेणैव व्यवह्रियते जनैः। नात्र च्छन्दसि गुरुलघुयतीनां नियमः, केवलम् अक्षरसंख्ययैव तत् पठ्यते। चरकसंहितायामस्यां गद्यांशः छान्दसच्छन्दसा लिखितः। अत्र यानि च्छन्दांसि वर्त्तन्ते तेषां पादसंख्या अक्षरसंख्याश्च कौतुकिनामवगमार्थं लिख्यन्ते।

गायत्री नवधा।

| छन्दोनाम | अक्षरसंख्या | | | |
|---|---|---|---|---|
| | १पादे | २पादे | ३पादे | ४पादे |
| गायत्री | ६ | ६ | ६ | ६ |
| पादनिचृत् | ७ | ७ | ७ | ० |
| अतिपादनिचृत् | ६ | ८ | ७ | ० |
| नागी | ९ | ९ | ६ | ० |
| वाराही | ६ | ९ | ९ | ० |
| वर्द्धमाना | ६ | ७ | ८ | ० |
| प्रतिष्ठा | ८ | ७ | ६ | ० |
| त्रिपाद् विराट् | ११ | ११ | ११ | ० |
| विराड् गायत्री | १२ | ८ | ० | ० |

१

उष्णिक् चतुर्व्विधा।

| छन्दोनाम | १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| उष्णिक् | ७ | ७ | ७ | ७ |
| परोष्णिक् | ८ | ८ | १२ | ० |
| ककुदुष्णिक् | ८ | १२ | ८ | ० |
| पुरोष्णिक् | १२ | ८ | ८ | ० |

२

अनुष्टुप् पञ्चधा।

| छन्दोनाम | अक्षरसंख्या | | | |
|---|---|---|---|---|
| | १पादे | २पादे | ३पादे | ४पादे |
| अनुष्टुप् | ८ | ८ | ८ | ८ |
| त्रिपादनुष्टुप् | ८ | ८ | ८ | ० |
| पुरानुष्टुप् | ८ | १२ | १२ | ० |
| मध्येऽनुष्टुप् | १२ | ८ | १२ | ० |
| अन्तेऽनुष्टुप् | १२ | १२ | ८ | ० |

३

बृहती सप्तधा।

| छन्दोनाम | १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| पुरस्ताद्बृहती | १२ | ८ | ८ | ८ |
| पथ्याबृहती | ८ | ८ | १२ | ८ |
| न्यङ्कुसारिणी | ८ | १२ | ८ | ८ |
| उपरिष्टाद्बृहती | ८ | ८ | ८ | १२ |
| क्वचिद्बृहती | ९ | ९ | ९ | ९ |
| क्वचिद्बृहती | १० | १० | ८ | ८ |
| महाबृहती | १२ | १२ | १२ | ० |

४

| छन्दोनाम | अक्षरसंख्या | | | | | |
|---|---|---|---|---|---|---|
| **पङ्क्तिः पञ्चदशधा ।** | | | | | | |
| | १मपादे | २यपादे | ३यपादे | ४र्थपादे | ५मपादे | ६ष्ठपादे |
| पङ्क्तिछन्दः | १२ | १२ | ८ | ८ | ० | ० |
| स्वतः पङ्क्तिः | १२ | ८ | १२ | ८ | ० | ० |
| आस्तारपङ्क्तिः | ८ | ८ | १२ | १२ | ० | ० |
| प्रस्तारपङ्क्तिः | ८ | १२ | ८ | १२ | ० | ० |
| विराट् पङ्क्तिः | ८ | १२ | १२ | ८ | ० | ० |
| अक्षरपङ्क्तिः | ५ | ५ | ५ | ५ | ० | ० |
| पङ् विधा | ५ | ५ | ४ | ४ | ० | ० |
| ,, | ४ | ४ | ५ | ५ | ० | ० |
| ,, | ५ | ४ | ४ | ५ | ० | ० |
| ,, | ५ | ४ | ५ | ४ | ० | ० |
| ,, | ४ | ५ | ४ | ५ | | |
| पद्पङ्क्तिः | ५ | ५ | ५ | ५ | ५ | ० |
| पङ्क्तिः | ४ | ६ | ५ | ५ | ५ | ० |
| पथ्यापङ्क्तिः | ८ | ८ | ८ | ८ | ८ | ० |
| जगतीपङ्क्ति | ८ | ८ | ८ | ८ | ८ | ८ |
| ५ | | | | | | |

| | | | | | |
|---|---|---|---|---|---|
| **त्रिष्टुब्ज्योतिष्मती त्रिविधा ।** | | | | | |
| पुरस्ताज्ज्योतिः | ११ | ८ | ८ | ८ | ८ |
| मध्यज्योतिः | ८ | ८ | ११ | ८ | ८ |
| उपरिष्टाज्ज्योतिः | ८ | ८ | ८ | ८ | ११ |
| ६ | | | | | |
| **जगती ज्योतिष्मती त्रिविधा ।** | | | | | |
| पुरस्ताज्ज्योतिः | १२ | ८ | ८ | ८ | ८ |
| मध्यज्योतिः | ८ | ८ | १२ | ८ | ८ |
| उपरिष्टाज्ज्योतिः | ८ | ८ | ८ | ८ | १२ |
| ७ | | | | | |

| छन्दोनाम | अक्षरसंख्या |
|---|---|
| **पादहीनच्छन्दः एकविंशतिधा ।** | |
| उत्कृतिः | १०४ |
| अतिकृतिः | १०० |
| सङ्कृतिः | ९६ |
| विकृतिः | ९२ |
| आकृतिः | ८८ |
| प्रकृतिः | ८४ |
| कृतिः | ८० |
| अतिधृतिः | ७६ |
| धृतिः | ७२ |
| अत्यष्टिः | ६८ |
| अष्टिः | ६४ |
| अतिशक्करी | ६० |
| शक्करी | ५६ |
| अतिजगती | ५२ |
| जगती | ४८ |
| त्रिष्टुप | ४४ |
| पङ्क्तिः | ४० |
| बृहती | ३६ |
| अनुष्टुप् | ३२ |
| उष्णिक् | २८ |
| गायत्री | २४ |
| २१ | |

गायत्रीप्रभृतिच्छन्दसां पादनिर्दिष्टायामक्षरसंख्यायाम् एकस्याक्षरस्य न्यूनता चेत् तर्हि तत् निचृत्संज्ञया, एकाक्षरस्याधिक्यं चेत् तत् भूरिक्नाम्ना, अक्षरद्वयन्यूनतायां विराट्नाम्ना अक्षरद्वयाधिक्येन च स्वराट्संज्ञया अभिधीयते । इति गङ्गाधरः ।